सखीभि र्व्याज मासाद्य कर्णाकर्णि-मनोहरम् ।
एतच्चरणयुग्मे तु रहस्ये कामकल्पना ( २५ ) ॥ २९ ॥
सखायं * पश्य सुश्रोणि शशाङ्कोऽस्य कुचोपरि ।
इत्यादिभावभरित-घृणालज्जा-विवर्जिता ॥ ३० ॥
कामासहिष्णुहृदया दूरे वा चान्तिके स्थिता ।
दूतीमुखेन लेखै र्वा ( २७ ) जिज्ञासास्फुरिताधरा ॥ ३१ ॥
क स्त्वं कस्यासि पुत्रो वा कस्मादागत एव वा ।
किमर्थं किमनुष्ठाता किं वा तेऽभिमतं वद ॥ ३२ ॥
अङ्गुष्ठ-केशपर्य्यन्तं पीत्वापि च न शाम्यति ।
तदा तद्भावचतुरो भावबोध-हविर्भुजि ॥ ३३ ॥
तस्यां (२८) निजमनोहारि हविःशेषं विधाय च ।
तत्र स्थित्वा पुरःक्षोभं कुर्य्यात् काम इवापरः ॥ ३४ ॥
भौमवारे चितास्थाने कुलसिन्दूर मानयेत् (२९) ।
तेनैव कुलकाष्ठेन यन्त्रं कृत्वा तदन्तरे ॥३५॥
स्फें स्फें (३०) किटिकिटिद्वन्द्वं लिखेच्चरुडमनुं ततः ।
पत्रे महिषमर्द्दिन्या नववर्णं लिखेत्ततः ॥ ३६ ॥
तद्बाह्ये जयदुर्गाख्यां श्मशानभैरवीं ततः ।
लिखित्वा पूजयेद्रात्रौ भद्रकालीं समाहितः ॥ ३७ ॥
कामाख्यां दिशमास्थाय ध्यात्वा कामकलां (३१) तनुम् ।
दिग्वासा गलिताशेष-चिकुरः कुलकौलिकः ॥ ३८ ॥

---

( २५ ) एतत् प्रणययोगेन रहस्ये काम-कल्पिता । क ।
* लेखेयमिति पाठान्तरम् । शशाङ्कस्य कुचोपरि इति पाठान्तरम् ।
( २७ ) दूतीमुखेन स्वैरं वा । क ।
( २८ ) तस्या । ख ।
( २९ ) कुलकुम्भरसमानयेत् । ख ।
( ३० ) स्फ्रें स्फ्रें । क ।
( ३१ ) कामाख्या-देशमास्थाय ध्यात्वा कामकलातनुम् । ख ।

"ध्यायेत् कालीं करालास्यां दंष्ट्रालीनविलोचनाम् (३२)।
स्फुरच्छव-करश्रेणीकृतकाञ्चीं दिगम्बरीम् ॥ ३९ ॥
वीरासनसमासीनां महाकालोपरिस्थिताम् (३३)।
श्रुतिमूलसमाकीर्ण-सृक्कनीं चण्डनादिनीम् ॥ ४० ॥
मुण्डमाला-गलद्रक्त-चर्च्चितां पीवरस्तनीम्।
मदिरामोदित (३४) (ता) स्फाल-कम्पिताखिलमेदिनीम् ॥४१॥
वामे खड्ग-खण्ड-(३५) मुण्ड-धारिनीं दक्षिणे करे।
वराभययुतां घोर-वदनां लोल-जिह्विकाम् ॥ ४२ ॥
शकुन्तपक्षसंयुक्त-वामकर्णविभूषणाम् (३६)।
शिवाभि र्घोर-रावाभिः सेवितां प्रलयोदिताम् (३७) ॥ ४३ ॥
चण्डहास चण्डनाद-चण्डास्फालै श्च भैरवैः।
गृहीत-नरकङ्कालै-र्जयशब्दपरायणैः ॥ ४४ ॥
सेविताखिलसिद्धौघसेविभिः सेवितां पराम् (३८)।
एवं तां कालिकां ध्यात्वा पूजयेत् कुलनायकः (३९) ॥ ४५ ॥
विना परपुराविशविवरान्तःप्रवेशनम्।
यत् किञ्चित् कुलसिद्धिस्तु जायते न मनागपि ॥ ४६ ॥
सर्व्वसिद्धिप्रदादेवी हेलयापि च चिन्तिता (४२)।
अतः सा दक्षिणा नाम्नी त्रिषु लोकेषु गीयते ॥ ४७ ॥
ततोऽष्टशतमामन्त्र्य सिद्धार्थं श्वेतसम्भवम्।
कालीमन्त्रेण साध्यादि-ग्रथितेन च भैरव ! ॥ ४८ ॥

---

(३२) दंष्ट्रानील-विलोचनाम्। क। (३३) महाकालोपवेष्टिताम्। ख।
(३४) मदिरामोदनो (ना) स्फाल। क। (३५) वामे खण्डाञ्च मुण्डञ्च। क।
(३६) शकुन्त-पक्ष-संसक्ता (क्तां) वालकर्णविभूषिताम्। ख।
(३७) शिवाभिः स्फेररावाभिः सेवितां प्रणवोदिताम्। क।
(३८) सेवितैः सेवितां पराम्। क। (३९) कुलसिद्धये। ख।
(४०) प्रवेशनाम्। ख। (४१) चित्तचिन्तिता। क।
(४२) शीतार्थं। ख। सिद्धार्थं इति सम्भवति।

विसृज्य देवीं हृदये स्थापयित्वा चतुष्पथे ।
वरालङ्कार-रचितो विशेत् परपुरं ततः ॥ ४९ ॥
देवीं ध्यात्वा द्वारदेशे नमस्कृत्य कुलं गुरुम् ।
सिद्धार्थं वामहस्ते तु गृहीत्वा मन्त्रमुच्चरन् ॥ ५० ॥
यत्र च द्वारि निगड़लौह-शङ्कुलावृतिः ।
भित्त्वा तत्र विशेद्रात्रौ (४३) निःशङ्कः क्षोभ-वर्जितः ॥ ५१ ॥
शतावृतिं समुल्लङ्घ्य विहरेत् स्वेच्छया ततः ।
अश्वागारे रथागारे कालिकागार-सन्निधौ ॥ ५२ ॥
देवतायतने वापि अञ्जनाञ्चित-लोचनः (४४) ।
ध्यात्वा स्वप्नवतीं विद्यां (४५) प्रविशेत् काममरूपग् ॥ ५३ ॥
यदि कोपि समायाति न भयं तत्र चिन्तयेत् ।
के यूयमिति वक्तव्ये (४६) वयञ्च वीरपूरुषाः ॥ ५४ ॥
वक्तुं (४७) गृहीतुं स्प्रष्टुं वा न शक्ताः पुरपालकाः ।
तत्र प्रदक्षिणीकृत्य पितरौ परमास्पदम् ॥ ५५ ॥
पूजयेद्यन्त्र मालिख्य निजं मन्त्रं जपेत्ततः ।
देवीकूटे तथोड्डाने (ड्डीने) कामरूपे तत-स्तटे (४८) ॥ ५६ ॥
जालन्धरे ततः पूर्णे यन्त्रभूमौ ततः परम् ।
एषु विन्यस्य चक्राणि पूजयित्वा प्रणम्य च ॥ ५७ ॥
अष्टधा दशधा वापि शतं वापि सहस्रकं ।
जप्त्वा पीठं समादाय भाण्डागारं (४९) ततो विशेत् ॥ ५८ ॥
निर्म्मलां भूमि मास्थाय तत्र सिद्धासनं ततः ।
रक्षा-(५०) पीठं पुरस्कृत्य प्रणमेत् पीठ-संमुखम् ॥ ५९ ॥

---

(४३) भित्त्वा तत्र विशेद्द्वारि । ख ।
(४४) अञ्जनाञ्जित-लोचनः । क ।
(४५) स्वप्नवतीं देवीं । क ।
(४६) कोयमिति च वक्तव्ये । ख ।
(४७) नक्तं । क ।
(४८) कामरूपे ततः स्तुत ! । ख ।
(४९) भाण्डागारे । ख ।
(५०) जपा पीठं । क ।

आगतासि महाभागे ! सिद्धयोने ! मदिष्टदे ! (५१) ।
कुलपूजां करिष्यामि उपचारं प्रयच्छ मे ॥ ६० ॥
पुत्राज्ञां मस्तके कृत्वा ततः साऽ गार मीक्षते (५२) ।
कुलपुष्पं (५३) तथा गन्धं नैवेद्यं पुन राहरेत् ॥ ६१ ॥
तद्वस्त्रावचितं सर्व्वं तेनैवोपस्कृतं ततः ।
समादाय तथा पूजां कृत्वा पक्वा (५४) निजेच्छया ॥ ६२ ॥
शालि-तण्डुल मादाय मत्स्य-मांसानि चैव हि ।
घृतं मधु तथा चान्यद् (५५) यद्वा यत्रैव लभ्यते ॥ ६३ ॥
स्थापयित्वा ततः पात्रे परमौक्षत्य साधकः ।
निजेष्टदेवतां ध्यात्वा (५६) निवेद्य शास्त्रमार्गतः ॥ ६४ ॥
फलं छित्वा द्विधा भित्वा तस्यार्द्धं कुलशक्तये (५७) ।
निवेदयेत् स्वयञ्चार्द्धं भक्षयित्वा पुरःस्थितः ॥ ६५ ॥
यदि नो विद्यते (५८) योषा तत स्तोये विसर्जयेत् ॥ ६६ ॥
ततः पीठं समादाय भूमि-मार्जनपूर्व्वकम् ।
पितुः समीपे संस्थाप्य तत्त्वचिन्तापरो भवेत् ॥ ६७ ॥

इति कुलचूड़ामणौ चतुर्थ-पटलः ।

---

(५१) मदिष्टये । ख ।
(५२) पुत्राणांमस्तमे कृत्वा ततः सा गुरुमीक्षते । ख । प्रामादिकः ।
(५३) फलपुष्पं । ख । (५४) गत्वा । क ।
(५५) घृतं मधु तथान्यद्वा । क । (५६) स्मृत्वा । क ।
(५७) फलं स्थित्वा द्विधा भित्त्वा तदर्द्धं कुलशक्तये । ख ।
(५८) यदि तन्नाद्यते शक्तरा । ख ।

# पञ्चमः पटलः ।

श्रीदेव्युवाच ।

निद्रावशगते देव ! निशाचारिण साधकः ।
कामरूपं प्रविश्याशु कामाख्या-योनिमण्डपम् ॥ १ ॥
परिष्कृत्य (१) कुले द्रव्ये लिखित्वा चक्र मुत्तमम् ।
साध्यसाधक-नाम्ना च दर्भितं विपुलीकृतम् ॥ २ ॥
कामस्थं काममध्यस्थं कामेन च पुटीकृतम् ।
कामेन कामयेत् कामं कामं कामेन (२) योजयेत् ॥ ३ ॥
ततो ध्यात्वा मनुं जप्त्वा पीठादि चावलोक्य (३) च ।
मातृ-पीठे (४) पितृमुखं स्थापयित्वा विधानतः ॥ ४ ॥
गृहीत्वा वस्त्रखण्डं वा (५) ताम्बूलद्वयमेव वा ।
काकिणीं वा तदर्द्धं वा (६) तद्योग्यं हरते हठात् ॥ ५ ॥
प्रदक्षिण-क्रमेणैव क्रमेण निःसरेत्ततः ।
पौराङ्गनानां द्रव्यं वा परिरक्षतु ( रक्षितु ) रेव वा ॥ ६ ॥
गृहीत्वा यदि निर्याति भ्रष्टो भवति साधकः ।
तेषां प्रहार स्तातुर्य्यं व्यभिचार-कुलक्षतिः ॥ ७ ॥
क्षियते यदि दुष्टेन तदा नश्यति निश्चितम् (७) ।
व्यभिचारात् पुरक्षोभो बद्ध श्चैवाभिभूयते (८) ॥ ८ ॥

---

(१) पुरस्कृत्य । क । (२) कामी कामेन योजयेत् । ख ।
(३) तत्र ध्यात्वा मनुं जप्त्वा पीठानि चावलोक्य च । ख ।
(४) मातृ पीठात् । क । (५) गृहीत्वा वस्त्रखण्डाद्या । ख । प्रामादिकः ।
(६) काकिनीं तदूर्द्धं वा । क । प्रामादिकः । (७) निश्चयात् । ख ।
(८) व्यभिचार पुरक्षोभे बन्धश्चैवाभिजायते । क ।

स्वप्नप्रबोधमन्त्रेण बोधयेत् पौर (पुरवासिनीम् (९) ।
अन्यवीरेण वा तेषां कुलीनेन च शङ्कर ! (१०) ॥ ९ ॥
प्रविश्य विघ्नः क्रियते (११) साधकस्य न संशयः ।
भूताः प्रेताः पिशाचा वा राक्षसा वा सरीसृपाः( १२ ) ॥ १० ॥
किन्नरी (१३) वा तथा नागकन्या पाताल-कन्यकाः ।
विद्याधरी भैरवश्च वटुको गणप स्तथा (१४) ॥ ११ ॥
प्रविश्य विघ्नं कुर्व्वन्ति सुप्ता दृष्ट्वा पुराङ्गनाः ।
अपत्यहानिं विक्षोभं व्याधिमुच्चाटनं तथा ॥ १२ ॥
द्रव्यहानिं व्याकूलत्वं कुर्व्वन्ति विघ्नहेतुकाः (१५) ।
एतत् पुरपते रेतत् कारणाद्यदि शङ्कर ! ॥ १३ ॥
त्वगहानि र्यदा जयात् (१६) (जाता) तदा नश्यन्ति साधकाः ।
तस्मात् सर्व्वप्रयत्नेन प्रबोधं कारयेद्गुरुः (१७) ॥ १४ ॥
रक्षा कार्य्या प्रयत्नेन कीलकान्निखनेत्ततः ।
वज्रं शक्तिं तथा दण्डं खड्गं पाशं तथाङ्कुशम् ॥ १५ ॥
तत्रतदिक् प्रतीनाञ्च (तद्दिक्पतीनाञ्च) पूजा कार्य्या प्रयत्नतः (१८) ।
पिष्टकं कदलं देव ! मोदकं पायसं तथा ॥ १६ ॥
भक्तं लाजं दंशनञ्च नारिकेलफलं ततः ।
विष्णवे परमात्मञ्च गणेशाय च पीठकम् ॥ १७ ॥
मोदकं नारिकेलञ्च कदलीफलमेव च (१९) ।
दिनेशाय कृष्णच्छागं दत्वा वीर मनुं ततः ॥ १८ ॥

---

(९) स्वप्नबोधक मन्त्रेण बोधयेत् पुरवासिनी य । ख ।
(१०) कुलान्येन च शङ्करः । क । (११) विघ्नं कुरुते । क । प्रामादिकः ।
(१२) भूताः प्रेता राक्षसाश्च सरीसृप देवकन्यका । ख ।
(१३) किन्नरी च । ख । (१४) हेतुकेशिगणस्तता । ख ।
(१५) विघ्नहेतुकम् । ख । (१६) हड़ाहानिर्यदा याति । क । (१७) गुरुम् । क ।
(१८) तत्र भाङ्गक पीताना पूजाकार्य्या विशेषतः । ख । प्रामादिकः ।
(१९) कदलीफल संज्ञकम् । क ।

जप्त्वा लोष्ट्र समादाय क्षिपेद्दशसु दिक्षु च ।
यथा यज्ञेऽभिषिक्तोऽस्मे (२०) यथा शक्रादिभिः सुरैः ॥ १९ ॥
विघ्नमाचर्य्यते तद्वत् कुलोपरि महेश्वर ! ।
शयनागार ऐशाने कुलशङ्कं निधापयेत् ॥ २० ॥
ऊर्द्धं वितस्तिविस्तार मधो विस्तारमेव च ।
खात्वा तत्र यन्त्रराजं पूजयेन्निशि साधकः ॥ २१ ॥
रात्रौ पर्य्यटनञ्चैव रात्रौ च कुलपूजनम् (२१)
न करोति कथं देव ! साधकः कौलिको भवेत् ॥ २२ ॥
गृहस्थाश्रम मासाद्य प्रतिहारं समाहितः ।
रात्रौ स्थित्वा (२२) कुलाचारकथां त्रिभुवनेश्वरीम् ॥ २३ ॥
नत्वा च प्रजपेन्मन्त्रं पूर्व्वशक्ति र्यदा (२३) भवेत् ।
प्रातःस्नात्वा गुरुं नत्वा देवान् पितृन् ऋषीं स्तथा ॥ २४ ॥
तर्पयित्वा यथाशक्ति पूजयेद् भक्तिभावतः ।
ततो युवतिसेवायां (या) यत्किञ्चिदुप (द्रप) (२४) देशतः ॥ २५ ॥
यथा पौराङ्गनालाप मिश्रणव्यपदेशतः ।
द्रव्यादिना (२५) तत्र वापि यथा भवति भैरव ! ॥ २६ ॥
दासदासी-प्रतिपालचारिणां (२६) प्रियकार्य्येपि ।
अस्योपरि कृपा तस्याः कीदृशी (२७) व्यपदेशतः ॥ २७ ॥
( ज्ञातव्या पुरभावस्तु यत्नतः कुलसाधकैः ।
केनापि व्यपदेशेन कुलचूड़ामणिं स्वतः ) * ॥ २८ ॥

---

(२०) महायज्ञेभिषिक्तैश्च ( क्तेच ) । ख ।
(२१) शक्ति पूजनम् । क । (२२) कुलाचारे । ख ।
(२३) लिखित्वा पूजयेद्यन्त्रं पूर्व्वाशक्तिर्यदाभवेत् ।
(२४) ततः पुरपतेः सेवायत् किञ्चिद्व्यपदेशतः ॥ ख ॥ (२५) द्रव्यादीनां । क ।
(२६) दासदासीदत्तिदानचारीणां । ख । प्रामादिकः ।
(२७) अस्योपरिक्रमात्तस्य । क । प्रामादिकः ।
* बन्धनी मध्यस्थं वचनं ख-पुस्तके नास्ति ।

गृहीत्वा स्वर्णपात्रे वा ताम्रे वा कुलसंज्ञके ।
लिखित्वा निजयन्त्रं वा कुलयन्त्रमथापिवा ॥ २८ ॥
श्रीयन्त्रं वाथ गन्धर्व्वयन्त्रं वा द्रव्यवि ( मि ) श्रितम् (२८) ।
मध्ये तत् कुलनाम्ना च दर्भितं निजनामभिः ॥ ३० ॥
पार्श्वे कामकलाबीजं निजमन्त्रेण वेष्टितम् ।
पूजयेत् साधकश्रेष्ठः कुलाम्नाय परायणः ॥ ३१ ॥
कुलपूजादिलिङ्गैस्तु रहितो विष्णुतत्परः (२९) ।
( गच्छन् स्वदन् नमन् वापि स्खलन् विष्णुपरायणः ॥ ३२ ॥
जय विष्णु ( विष्णो ! ) हरे ! ब्रह्मन् नानाद्य (नामाद्य) पदविस्तरैः ।
स्मर्त्तव्योहं कुलाभिन्ने ररखे वा जलाशये ॥ ३३ ॥
ततः पूर्व्वोक्तरूपेण कुलक्षोभं समाचरेत् ) ।
ततो रात्रौ शून्यगेहे उद्याने वा सुरालये ॥ ३४ ॥
आनीय कुलजां देवीं मूलमन्त्रेण दीक्षयेत् ।
ततः पूर्व्वोक्तरूपेण कुलक्षोभं समाचरेत् (३०) ॥ ३५ ॥
एवं कृते न सिद्धि श्चेन्मूलमन्त्रं समभ्यसेत् ।
पीठानां परमं पीठं कामरूपं महाफलम् ॥ ३६ ॥
तत्र यत् क्रियते पूजा सकृदापि महेश्वर ! ।
विहाय सर्व्वपीठानि तत्र पुत्र वसाम्यहम् (३१) ॥ ३७ ॥
तस्माच्छतगुणं प्रोक्तं कामाख्या योनि मण्डलम् ।
तेषां फलं महादेव ! वहु किं कथ्यतेधुना ॥ ३८ ॥
यत्र कोटिगणैः सार्द्धमाद्या महिषमर्द्दिनी ।
यत् पीठं ब्रह्मणो वक्त्रं गुप्तं सर्व्वसुखावहम् ॥ ३९ ॥

---

(२८) श्रीयन्त्रं वापिगन्धर्व्वदुरापं द्रव्यमाश्रितम् ॥ ख ।
(२९) वाह्यतोविष्णुतत्परः । ख ।   * वन्धनीमध्यस्थोग्रन्थः क पुस्तके नास्ति ।
(३०) समारभेत् । क ।   (३१) तस्मादेहेवसाम्यहम् । क ।

यतो देवाश्च देव्यश्च ऋषयश्चैव (३२) भावजाः ।
सर्व्वेऽप्याविर्भवन्त्यत्र तेनगुप्तं महाकुलैः (३३) ॥ ४० ॥
द्विविधञ्चैव तत्पीठं गुह्यं व्यक्तं महेश्वर !
व्यक्ताद्गुह्यं महाधुन्यं दुरापं साधकोत्तमैः ॥ ४१ ॥
गुप्तं सर्व्वत्र देवेश ! लभ्यते कुलसुन्दरैः ॥ ४२ ॥

भैरव उवाच ।

आकर्षणविधानं मे स्वतन्त्रं समुदीरय ।
पुत्रोऽस्मि यदि देवेशि ! सृष्टिसंहारकारिणि ! ॥ ४३ ॥

देव्युवाच ।

शृणु पुत्र ! महाविद्या माकर्षणकरीं पराम् ।
यदाराधनमात्रेण देवानाकर्षयेन्नरः (३४) ॥ ४४ ॥
ब्रह्मा सरस्वतीयुक्तो देवतासुखसंयुतः (३५) ।
वीरव्यक्ति (शक्ति) समाकीर्णः कालीमन्त्र उदाहृतः (३६) ॥ ४५ ॥
एकं वा द्विगुणं वापि त्रिगुणं वापि भैरव ! ।
जप्त्वा कर्षयति स्वैरं स्थावरं (स्थावर) जङ्गमादिकम् ॥ ४६ ॥
एषा विद्या (३७) महाकाली गुह्याद् गुह्यतरा स्मृता ।
सुप्ता निद्रामिता मत्ता भ्रामितावनता तथा (३८) ॥ ४७ ॥
समस्तदोषजालेन ग्रथिता कुलसुन्दरी ।
निशाचारं दिवाचारं सन्ध्याचारञ्च पल्लवम् ॥ ४८ ॥
दर्भितं वीजसंयोगं भावयेद्योगमेव च ।

---

(३२) सुनयश्चैव । ख । (३३) सदाकुरु । ख ।
(३४) देवानाकर्षयेद्ध्रुवम् । ख ।
(३५) ब्रह्मा सरस्वतीगुप्ता देवतासुख-संयुता । ख । प्रामादिकः ।
(३६) वीजशक्तिसमाकीर्णं कालीमन्त्रमुदाहृतम् ॥ ख ॥
(३७) एतद्विद्या । क । (३८) विद्रावणरतापरा । ख ।

ज्ञात्वा प्रबोधयेद्वीरो गुरुरत्नैककारणम् (३८) ॥ ४८ ॥
नियमः पुरुषे ज्ञेयो न योषित्सु कथञ्चन ।
यद्वा तद्वा येन केन सर्व्वदा सर्व्वतोऽपि च ॥ ५० ॥
योषितां ध्यानयोगेन सिद्धयः स्यु र्न संशयः ।
यथा यस्कान्तमात्रेण गूढ़विद्यर्गिर्लाव्यक्तयः (चयः) (४०) ॥ ५१ ॥
स्वयमेव वह्नि र्याति यथा वा सौरतेजसा ।
सूर्य्यकान्तः स्फुटरुचि र्यथा च रविरश्मिभिः (४१) ॥ ५२ ॥
चन्द्रकान्तं द्रावयति यथा वर्षासु वारिदैः (वारिदः) ।
जलसेकाभितप्ता भू रसपूर्णा प्रचक्षते ॥ ५३ ॥
( पुष्पदर्शनमात्रेण भक्तिमुक्ति र्यथा भवेत् ।
महादुर्गाप्रसादेन यथा सिद्धीश्वरो भवेत् ॥ ५४ ॥
कुलपुष्पप्रसादेन यथा प्रीति स्तु जायते ।
गङ्गास्मरणमात्रेण निष्पापो जायते यथा ।
यथा कर्षणमात्रेण शिव एव प्रजायते ॥ ५५ ॥
योषिच्चिन्तनमात्रेण यथेयं (४२) वरदायिनी ) ।
तस्मात् सर्व्वप्रयत्नेन दीक्षयेन्निजकौलिकीम् ॥ ५६ ॥

---

(३८) गुरुरत्नैव कारणम्। क। (४०) गूढ़विद्यां प्रकाशयेत्। ख।
(४१) सूर्य्यकान्तं स्फुटं रौति यथाच विधुरश्मिभिः। क। प्रामादिकः।
(४२) तथेयं। क।

क पुस्तकेतु "जलसेकाभितप्ताभू रिति श्लोकार्द्धात् परं

क्षुधार्त्तः क्षीरपाणेयन्तृप्तोऽभिजायते नरः।
पुष्पा (पुष्प दर्शनमात्रेण गन्धर्व्वः स्वपितो ( प्रीयते ) यथा ॥
गुरु सेवन मात्रेण मन्त्रसिद्धिर्यथा भवेत् ।
महापद्मवनध्यानात् यथा सिद्धीश्वरो भवेत् ॥
त्रिपुराध्यानमात्रेण शक्ति मुक्तिर्यथा भवेत् ।
इति श्लोकद्वयं दृश्यते ।

भैरवोऽस्य ऋषिः प्रोक्त उष्णिक्छन्दस्तु देवता ।
कालिका दक्षिणा देवी चतुर्व्वर्गफलप्रदा ॥ ५७ ॥
पूर्व्वं वीजं पराशक्ति र्व्वीजेन मूर्त्तिकल्पना ।
षड्दीर्घभाजा वीजेन कुर्य्यादङ्गादिकल्पना (नाम्) ॥ ५८ ॥
चतुर्द्दश विभागेन * मातृकार्णैः पृथक् पृथक् ।
हृदये हस्तयोः पादयुगले विन्यसेत्ततः ॥ ५९ ॥
पश्चाच्छन्मूलमन्त्रेण व्यापकं विन्यसेत्ततः ।
पञ्चधा ध्यानमेकत्र पूर्व्वोक्तञ्च समाचरेत् ॥ ६० ॥
दशपञ्चारपद्मेषु † पीठ-पूजां समाचरेत् ।
तत्रावाह्य यजेद्देवीं दक्षिणां कुलभूषणाम् ॥ ६१ ॥
महाकालं यजेत् पश्चात् पीठशक्तिं ततो यजेत् ।
कालीं कपालिनीं कुल्लां प्रथमे च त्रिकोणके ॥ ६२ ॥
कुरुकुल्लां विरोधीञ्च विप्रचित्तां तथैव च ।
उग्रमुखी मुग्रप्रभां प्रदीप्ताञ्च तथैवं च ॥ ६३ ॥
नीलां घनां ‡ बलाकाञ्च मात्रां मिताञ्च मुद्रिकाम् ।
ब्रह्माख्याद्या स्तथा वाह्ये यजेत् पूर्व्वदले क्रमात् ॥ ६४ ॥
एवं कृत्वा जपेन्मन्त्रं हविष्याशी दिवा शुचिः ।
लक्षं रात्रौ तथालक्षं महाशौचपरायणः ॥ ६५ ॥
अन्यासां योषिताञ्चात्र न पूजा नापि चिन्तनम् ।
रात्रौ जपैकमात्रेण सिद्धिदा दक्षिणा भवेत् ॥ ६६ ॥
अङ्गन्यासं समाचर्य्य ध्यात्वा देवीं जपेद्बुधः ।
( अरण्यामथवा रात्रौ महाकाली महोदया ॥ ६७ ॥

---

* ह्रूं ह्रूं बीजेनैवशक्ति । ख । पञ्चदशविभागेन । ख ।

† दशधा योगपद्मेषु । ख ।

‡ घनां नीलां । क ।

अनेनैव विधानेन पूजिता विश्वरूपिणी ।
आकर्षयेद्देवकन्यां पाताले नागकन्यकाम् ॥ ६८ ॥
अरण्या च महाकाली द्वितीया चेयमीरिता ।
पूजा ध्यानं प्रयोगश्च जपश्चैव विशेषतः ॥ ६९ ॥
समानं सर्व्वमेतस्या स्तस्या देव्या प्रकीर्त्तितम् ।
वारिजापादिकं सर्व्वं पूर्व्वोक्तं चात्र कीर्त्तितम् ॥ ७० ॥
अरण्याय महाकन्याः पूजायां निर्मला भवेत् ) * ।
श्मशाने शङ्खमासाद्य तत्र यन्त्रं विलिख्य च ॥ ७१ ॥
अष्टमीरात्रि मारभ्य चतुर्द्दश्यां समापयेत् ।
अष्टोत्तरशतं † मन्त्रीं मन्त्रयित्वा सुसंयतः ॥ ७२ ॥
नग्न स्ताम्बूलपूर्णास्यो मुक्तकेशो जितेन्द्रियः ।
मदिरा-घूर्णनयनः परयोषित्-समागमे ॥ ७३ ॥
पूजयेद् गन्धपुष्पेन दिग्वासाः कुलभूषणः ।
यन्नाम्ना दर्भितं यन्त्रं पूजयेद्वीर-वल्लभः ॥ ७४ ॥
सा समायाति कामार्त्ता यत्र देशे स पूजकः ।
मद्यं मांसं तथा वत्स ! यत् किञ्चित् कुलसाधनम् ॥ ७५ ॥
तस्यै दत्त्वा ततः शेषं गुरवे विनिवेद्य च ।
तदनुज्ञां मूर्द्ध्नि कृत्वा शेषञ्चात्मनि योजयेत् ॥ ७६ ॥
मद्यं मांसं विना वत्स ! कुलपूजां समाचरेत् ।
जन्मान्तरसहस्रस्य सुकृतं तस्य नश्यति ॥ ७७ ॥
यत्रावश्यं विनिर्द्दिष्टं मदिरादान-पूजनम् ।
ब्राह्मण स्ताम्रपात्रेषु मधु मद्यं प्रकल्पयेत् ॥ ७८ ॥

---

* बन्धनी-मध्यस्था चतुःश्लोकी ख-पुस्तके न दृश्यते ।
अत्र पाठानामसङ्गतता प्रायेण प्रतिभाति ।
पुस्तकान्तराभावात् शोधनञ्च न सम्भवेत् ।

† अष्टोत्तर शतमर्घ्यं । ख ।

अथवा कुलमद्येन पूजयेत् कुलपूजितम् ।
योगिभिः पीयते मद्यं तन्मद्यं योगिपुङ्गवैः ॥ ७९ ॥
न मद्यं पानयोग्यं स्याद्यन्मद्यं गुड़पिष्टकम् ॥ ८० ॥

इति कुलचुड़ामणौ पञ्चमः पटलः ।

---

## षष्ठः पटलः ।

—:**:—

देव्युवाच ।

अथ वच्यामि ते वत्स ! विधानं यत्र यद्भवेत् ।
आनीय देवीं तद्गात्रे व्यापकं विन्यसेत्ततः ॥ १ ॥
प्रथमं साधकश्रेष्ठो देवीकूटस्य मस्तके ।
( विलिख्य यन्त्रं पूर्व्वोक्तं पूजयेत् कुलवर्त्मना ॥ २ ॥
पीठादि देवीं प्रणमेत् पूजयेद् गन्धपुष्पकैः ।
महाभागां ततो मूलदेवी सावरणैः सह ) * ॥ ३ ॥
लक्षैकं तत्र जप्त्वा (१) तु उड्डीयानं ततो विशेत् ।
तत्पीठे योगनिद्राख्यां (२) पूजयित्वा ततो यजेत् ॥ ४ ॥
निजेष्टदेवतां तत्र जपेल्लक्षं समाहितः ।
कामरूपं (३) ततो गत्वा ततः कात्यायनीं यजेत् ॥ ५ ॥
जप्त्वा लक्षं ततो रात्रौ कामाख्यां प्रथमं यजेत् ।
ततो जालन्धरे गत्वा पूर्णेशीं प्रथमं यजेत् ॥ ६ ॥
तत्रापि लक्षमानेन जप्त्वा मन्त्रं समाहितः ।
ततः पूर्णगिरौ गत्वा यजेच्चण्डीं ततो जपेत् ॥ ७ ॥
कामरूपान्तरे गत्वा (४) कामाख्यां प्रथमं यजेत् ।
ततः प्रान्ते महादेवीं (५) यजेद्दिक्करवासिनीम् ॥ ८ ॥

---

* वन्धनी-मध्यस्थः सार्द्धश्लोकः ख-पुस्तके नास्ति ।
(१) संपूज्य जप्त्वा देवेशि ! ( श ! ) । ख ।
(२) ततः पीठयोगनिद्राम् । क ।
(३) कामरूपे । ख ।
(४) कामरूपान्तरे वत्स ! । ख ।
(५) वेहारे च महादेवीं । क ।

एवं पीठेश्वरीं जप्त्वा पूजयेदिष्टदेवताम् (६)।
सप्तपीठे सप्तलक्षं जप्त्वा रात्रौ समाहितः ॥ ९ ॥
संख्यापूर्त्तौ ततः पृच्छेत् (७) का त्वं देवि! कुलोत्तमे।
एवं कृते विस्मृता चेत् (८) स्वनाम्नि गोत्रजन्मनि ॥ १० ॥
तवेष्टदेवतैवाहं वृणुष्व वरमुत्तमम् (९)।
ततः प्रणम्य देवेशीं वृणुयाद्वरमात्मनः ॥ ११ ॥
यद्येवं नैव सा देवी (१०) पुनः पूर्व्वोक्त माचरेत्।
(अक्षोभित-कुलाचार-परिचर्य्या-परायणः) * ॥ १२ ॥
अथवा सर्व्वपीठेषु यजेन्महिषमर्द्दिनीम्।
ततः प्रसन्ना भवति स्वैरं कुलवरप्रिया ॥ १३ ॥
ततो जप्त्वा मूलमन्त्रं सर्व्वसिद्धीश्वरो भवेत्।
राजवृक्षं समालोक्य तन्मूले स्वेष्टदेवताम् ॥ १४ ॥
पूजयित्वा महारात्रौ त्रिदिनं प्रजपेन्मनुम्।
लक्षपीठफलं देव! (११) लभते साधकोत्तमः ॥ १५ ॥
वेतालं पादुकासिद्धिं खड्गसिद्धिञ्च भैरव!
अञ्जनं तिलकं गुप्तिं महिषासुरमर्द्दिनीम् (१२) ॥ १६ ॥
साधयेत् साधकोऽभीष्टं (१३) मूलविद्यां महेश्वर! ॥ १७ ॥

भैरव उवाच।

वेतालादि-महासिद्धिः कथं भवति चण्डिके!।
तस्मे कथय देवेशि! (१४) यदि स्नेहोऽस्ति मां प्रति ॥ १८ ॥

---

(६) पूजयित्वेष्टदेवताम्। क। (७) संख्यापूर्णे पुनः पृच्छेत्। क।
(८) एवं कृता विस्मृता चेत्। ख। (९) वृणुयाद्वरमुत्तमम्। क।
(१०) संप्रार्थितैव सा देवी। ख। प्रामादिकः।
(*) वन्धनी-मध्यस्थं श्लोकार्द्धं ख-पुस्तके नास्ति।
(११) अनभिष्टफलं देव। क।
(१२) महिषासुरमर्द्दिनी। क। (१३) साधयेत् साधकाभीष्टं। ख।
(१४) तत्त्वं कथय देवेशि।। ख।

देव्युवाच ।

निम्बवृक्षोद्भवं (१५) काष्ठं श्मशाने साधकोत्तमः ।
भौमवारे मध्यरात्रौ शवासन-युगाङ्किते (१६) ॥ १९ ॥
खनित्वा चाष्टलक्षं वै जपेन्महिष-मर्द्दिनीम् ।
तत्सहस्रं हुनेद्वत्स ! तत्रैव पितृकानने ॥ २० ॥
काष्ठमुद्धृत्य (१७) तत्रैव दण्डपादुक-चिह्नितम् ।
गत्वा दुर्गाष्टमी-रात्रौ श्मशाने निक्षिपेत्ततः ॥ २१ ॥
तस्योपरि शवं कृत्वा पूजयित्वा यथाविधि ।
शवासनगतो वीरो जपेदष्टसहस्रकम् ॥ २२ ॥
ततो मातृबलिं दत्त्वा काष्ठमामन्त्रयेत्ततः ।
स्फें स्फें दण्ड महाभाग योगिनी-हृदयप्रिय ! (१८) ॥ २३ ॥
मम हस्तस्थितो नाथ ! ममाज्ञां परिपालय ।
एवमामन्त्र्य वेताल यत्र यत्र प्रयुज्यते ॥ २४ ॥
तं तं चूर्णीविधायाथ (१९) पुनरायाति कौलिकः ।
गच्छ गच्छ महाभागे ! पादुके ! वरवर्णिनि ॥ २५ ॥
मत्पादस्पर्श-मात्रेण गच्छ त्वं शतयोजनम् (२०) ।
अष्टलौहं समासाद्य (२१) पञ्चाशदङ्गुलाकृतिम् ॥ २६ ॥
खड्गं कृत्वा तत्र यन्त्रं लिखित्वा प्रजपेन्मनुम् ।
तत् सहस्रं ततो जप्त्वा (२२) महाशव-कलेवरे ॥ २७ ॥
खनित्वा वीजवृक्षाग्रे वह्निरक्षान्तु कारयेत् । (२३)
कुलाष्टम्या मर्द्धरात्रे चितामध्ये समाहितः ॥ २८ ॥

---

(१५) विल्ववृक्षोद्भवं । ख ।
(१६) गत्वासनयुगाङ्किते । ख ।
(१७) काष्ठमुद्धृत्य तेनैव । ख ।
(१८) स्फें स्फें दण्ड महाभाग योगिनी हृदयप्रिय । क ।
(१९) तं तं तूर्णीं विधायाथ । ख ।
(२०) प्रां प्रीं प्रं शत योजनम् । क ।
(२१) खड्गबाहं समालोक्य । ख ।
(२२) तत् सहस्रं ततो हुत्वा । ख ।
(२३) वह्ना शुष्कन्तु भावयेत् । ख ।

प्रीतिपूर्व्वं समामन्त्र हुनेत् पितृवने ततः (२४)।
मधुरत्रयसंयुक्तं बिल्वपत्रेण संयुतम् ॥ २९ ॥
पादादिमूर्द्धपर्य्यन्तं होमान्ते बलिमाहरेत्।
बल्यन्ते परमा माया देवी महिषमर्द्दिनी ॥ ३० ॥
आयाति बलिपूर्णास्या वरहस्ता महोन्मुखी।
गच्छ वत्सेति शब्दे वै खड्गमुत्तोल्य धारयेत् (२५) ॥ ३१ ॥
घोरदंष्ट्रे! महाकालि! करवाल-स्वरूपिणि!।
क्रौं ह्रीँ ऊँ कुरु कल्याण (२६) (णि) विपक्षच्छेद विस्तरम् ॥ ३२ ॥
एवमामन्त्र खड्गन्तु यमुद्दिश्य क्षिपेन्नरः।
छित्वा छित्त्वा पुनश्छित्त्वा गच्छत्याकृष्यते पुनः ॥ ३३ ॥
अथवा कृष्णमार्जार मेकघातेन च्छेदयेत् (२७)।
कुञ्जे चतुष्पथे रात्रौ निखनेन्मन्त्रितं ततः ॥ ३४ ॥
तत्र मोचां समारोप्य यावत् पत्रं प्रजायते।
तावद् भुक्त्वा हविष्यान्नं प्रतिरात्रं जपेदभीः ॥ ३५ ॥
अष्टोत्तर-सहस्रन्तु एकाकी दीपवर्जितः।
उत्पन्नं पत्र मालोक्य (२८) चित्वा (छित्त्वा) निश्छिद्र मानयेत् ॥ ३६ ॥
तत्र भुक्त्वा हविष्यान्नं तद्दिने तटिनी तटे (२९)।
तमानीय सुहृत्सङ्गः चालयेन्मन्त्रमुच्चरन् ॥ ३७ ॥

---

(२४) प्रति सर्व्वं समामन्त्रा हुनेत् पितृवने ततः। इति क-पुस्तके। ख पुस्तके तु प्रीतिं पूर्व्वान्तु संपूज्य गच्छेद्गोत्रवने तत इत्येवं दृश्यते, उभयमेवासङ्गतम्। मया तु पुस्तक-द्वयात् विशुद्धांशमवलम्ब्य कल्पितः पाठो मूले न्यवेशि। तथ्यन्तु जानाति भगवान् परम शिव एव।

(२५) खड्गमुत्तोल्य दापयेत्। क। (२६) कश्चित्त्वं कुरु कल्याणि। ख।

(२७) घातयेत्। ख।

(२८) तद्वृक्षपत्रमालोक्य। ख। (२९) तटिनी जले। ख।

तच्छ्रोतोऽभिमुखं वत्स ! (३०) यदस्थि प्रतिगच्छति ।
तदानीय यजेत्तत्र कालिकां घोरनिस्वनाम् ॥ ३८ ॥
अभिमन्त्र्य सहस्रन्तु कालीमन्त्रं समाहितः (३१) ।
सिद्धाञ्जनो भवेन्मन्त्री नात्र कार्य्या विचारणा ॥ ३९ ॥
चन्दनागुरुकस्तूरी-मिश्रितं चास्थि-घर्षणम् ।
कृत्वा संपूज्य विधिवत् (३२) सर्व्वं जयति साधकः ॥ ४० ॥
कुलमीनं कुलान्नञ्च कुलमद्यं कुलेश्वर ! (३३) ।
कुलस्थाने समानीय दत्त्वा देव्यै प्रयत्नतः ॥ ४१ ॥
( अष्टोत्तर सहस्रन्तु जप्त्वा भूमितले स्थितः ) * ।
भूमौ फुत्कारमन्त्रेण ( मात्रेण ) विवरं तत्र जायते ॥ ४२ ॥
शत-योजने दूरे वा यत्र साध्यस्थिति र्भवेत् ।
तत्रैव गमनं तस्य भूतलान्तः-प्रसर्पिणः ॥ ४३ ॥
एवं विवरमध्ये वा गवाक्षे कुहरेऽपि च ।
कायसङ्कोच मासाद्य गच्छत्यविकलो नरः ॥ ४४ ॥
दुर्गामन्त्रं विना वत्स ! कालीमन्त्रं तथैव च ।
सिद्धयः कुलनाथेश ! जायन्ते न कथञ्चन (३४) ॥ ४५ ॥

इति कुलचूड़ामणौ षष्ठः पटलः ।

---

(३०) यच्छ्रोतोऽभिमुखं वत्स । ख ।
(३१) कालीमन्त्रं समाहितः । ख ।
(३२) कृत्वा तिलकमादाय । ख ।
(३३) कुल मूल ( मूलं ) कुलद्रव्य कुलमद्यं महेश्वर ! । ख ।
* वन्धनी-मध्यस्थं क-पुस्तके नास्ति ।
(३४) जायन्ते न कदाचन । ख ।

## सप्तमः पटलः ।

भैरव उवाच ।

मातर्महिषमर्द्दिन्याः सङ्केतं कथयस्व मे ।
कुलाचारस्य संसिद्धैर भुक्तिमुक्ति-प्रसिद्धये (१) ॥ १ ॥

देव्युवाच * ।

सृष्टिस्थिति-विनाशाना मादिभूता महेश्वरी ।
गोप्या सर्व्वप्रयत्नेन शृणु तां कथयामि ते ॥ २ ॥
त्रैलोक्यवीजभूतान्ते सम्बोधनपदं ततः ।
सृष्टिसंहारकौ वर्णौ विद्या महिषमर्दिनी ॥ ३ ॥
अतिगुह्यतरा त्रित्या ( नित्या ) सृष्टिस्थिति-विधायिनी ।
सर्व्वदेव-सर्व्वसिद्धि-वीजभूत (ता) सनातनी ॥ ४ ॥
अत्यन्तगुरुभक्ताय शुद्धाय यदि कथ्यते ।
तदाष्टवर्णं वक्तव्यं न वीजं नापि साधनम् ॥ ५ ॥
साधारणी प्राणविद्या हृल्लेखा सिद्धिगोचरा ।
एतत् पूर्व्वस्थिता देवी गुरुसिद्धि-विनाशिनी ॥ ६ ॥
विशेषतः कलियुगे महासिद्धौघदायिनी ।
गुरूणां कुलनाथानां महाशाप-प्रदायिनी ॥ ७ ॥

---

(१) विद्या महिषमर्दिनी । क ।

* देव्युवाच इत्यादि अति गुह्यतरा नित्येत्यन्तो ग्रन्थः क पुस्तके नास्ति । परन्तु "मातर्महिष-मर्दिन्याः सङ्केतं कथयस्व मे" इत्यतः परं "कुलाचारस्य संसिद्धैर विद्या महिषमर्दिनी, अतिगुप्ता परा विद्या सृष्टिस्थिति-विधायिनी"ति दृश्यते ।

जया दुर्गाभया प्रोक्ता (२) परमा सिंहवाहिनी ।
त्रैलोक्यवीजभूतान्ते सा परा मर्द्दिनीकुलम् ॥ ८ ॥
वरं वह्निप्रिया देया (३) न देया नमसाहिता ।
दत्ता च परमा विद्या ङेयुता हृदयान्विता ॥ ९ ॥
सर्व्वत्र कुलशास्त्रज्ञ ! महाशाप-प्रदायिनी (४) ।
तस्मात् सर्व्वप्रयत्नेन गोप्तव्येयं नवाक्षरी ॥ १० ॥
अष्टलक्षं जपेन्मन्त्रं तद्दशांशं हुनेत्ततः ।
नारदोऽस्य ऋषिः प्रोक्त श्छन्दो गायत्र मीरितम् (५) ॥ ११ ॥
देवता महिषघ्नीयं पूर्व्वं वीजं परापरा ।
ध्यायेत् कालीं महादैत्य-युद्धराग-महोन्मुखीम् ॥ १२ ॥
दक्षिणे चक्र-खड्गौ च वाणं शूलं तथैव च ।
वामे खड्गं तथा चर्म्म धनु स्तर्जन मेव च ॥ १३ ॥
विभ्रतीं काल-तीव्रोरु-महिषाङ्ग-निषेदुषीम् ।
पीताम्बरधरां देवीं पीतोन्नत-कुचद्वयाम् ॥ १४ ॥
जटामुकुट-शोभाढ्यां पितृभूमि-सुखावहाम् ।
ॐ महिष-हिंसके हूं फट् हृदयाय नमो हृदि (६) ।
ॐ महिष-शत्रो हूं फट् शिरस्युदीरितम् ॥ १५ ॥
ॐ महिषं द्वेषय द्वेषय हूं फट् शिखामन्त्रः समीरितः ॥ १६ ॥
ॐ महिषं हन हन हूं फट् कवच इत्यपि (७) ।
महिष-मर्द्दिनी हूंफट् अस्त्राणि शृणु भैरव (८) ॥ १७ ॥

---

(२) जयदुर्गाभया प्रोक्ता । क । (३) वरं वह्निप्रिया युक्ता । ख ।
(४) महाशाप-प्रणाशिनी । ख । प्रामादिकः ।
(५) छन्दो गायत्री समीरितम् ॥ ख ॥
(६) ओं महिषशत्रोः शार्ज्जिहूंफट् उदीरितः । क । प्रामादिकः ।
(७) ओं महिषं हनहन देवि हूं फट् कवचमित्यपि । क ।
(८) ओं महिषमर्द्दिनि हूंफड़स्त्राङ्गं शृणु भैरव ! । ख ।

अष्टपत्रे यजे देवी दु(र्दु)र्गाद्या दीर्घपूर्व्विकाः।
आयुधानि पत्राग्राग्रे यादिभिः क्रमशो यजेत्॥ १८॥
ब्रह्माख्याद्या * स्ततः पश्चाल्लोकपालां स्ततो वहिः।
तदस्त्राणि सिद्धमन्त्री (९) प्रयोगञ्च समाचरेत्॥ १९॥

प्रयोगे होमनियमः (१०) सहस्रं वसु-सम्मितम्।
एषा विद्या महाविद्या न देया यस्यकस्यचित्॥ २०॥
यदि भाग्यवशा लब्धा कुलदेवी कुलोत्तमैः।
दीक्षिता कुलजाति स्तु सिद्धिदा सैव नान्यथा॥ २१॥

भैरव उवाच।

## [ महिषमर्द्दिनी-स्तोत्रम्। ]

मच्चित्ते चर चण्डि! चूर्णित-दुराचार-प्रचण्डासुरे!
स्वैरं दारय भूरि-दुर्द्धर-दरद्रोहोर्म्मि-मर्म्मापदः।
तेनायं निरुपद्रुतो निरुपम-श्रीपाद-पद्माटवी-
प्राप्तानन्तरसार्णवे मम मनोहंस श्चिरं नन्दतु [१]॥ २२॥

हित्वा चण्डि! हिरण्य-दारणपटु-प्रोद्दाम-हस्ताङ्गुलि-
स्फायत्-कम्र-सुमेरुसोदर-सटाटोपं नृसिंहं सुराः।
मात स्त्वत्-पशुपाश-पेषणपटु-श्रीपाद-संसेविनं
सेवन्ते करिवैरिणं किमरिभि र्भीति र्भवेत् सेविनः [२]॥ २३॥

चण्डि! त्वद्विषयान्तराचरपदं श्रोत्रान्तर श्चेद् गतं
तत्तत्त्वं पुरुष-प्रकृत्यनुगतं ब्रह्मादिभि र्गीयते।
तस्माद्देवि! समस्त-दैवतसुधा-सारैकधाम-स्फुरत्-
श्रीमत्पादपयोज-चुम्बनपरं मामद्य सम्भावय [३]॥ २४॥

---

* ब्राह्मराद्याश्चेति तन्त्रसारे।

(९) सिद्धमन्त्रः। ख। (१०) प्रयोगे होमसमये। ख।

मन्निन्दा यदि वास्तु ते कुलपथाचारादरं (११) मास्तु वा
कीर्त्तिः केशव-कौशिकार्च्चनचरी नैवास्तु मत्सन्निधिः ।
मात र्ब्रह्महरि-स्मरारि-हुतभुग् दैत्यारि-सेवास्पद-
श्रीमत्-पादपयोज-चिन्तनविधौ चित्तं सदैवास्तु नः [४] ॥ २५ ॥

निर्द्दिष्टोऽस्मि यदि त्वदीय-पदयुक्-पूर्व्वापरी-भावने
निर्द्दिष्टस्य तदा ममापि विरलं किम्वास्तु सिद्धास्पदम् ।
तस्माद्देवि ! कृपाभराञ्चिततरं श्रीपादपद्मद्वयम्
मच्चित्तेऽद्यतसम्पदि प्रसरतु क्षेमङ्करि ! क्षम्यताम् [५] ॥ २६ ॥

आत्मानं (१२) परिरभ्य भूतपति रप्युन्माद मासादितः
स्फारं जीवन-रक्षणे स च कृती नैवाभविष्यत् प्रभुः ।
दैवाद्विच्युत-चन्द्र-चन्दनरस-प्रागल्भ्य-गर्भस्रव-
न्माध्वीपूर्ण-भवत्पदैक-कमलामोदेन नास्वादितः [६] ॥ २७ ॥

हाहा मात रनादि मोहजलधि-व्याहार-विद्धाखिल-
ब्रह्मानन्द-रसाभिषेक-विरस-स्वान्तोदरे मादृशि ।
युष्माकं सुरवृन्द-निर्भर-मनस्तापाभिभूतिक्षमः
श्रीमद्भक्तिरसातिदुर्दिन-परीवाहः सदा सर्पतु [७] ॥ २८ ॥

यत्पाद-स्फुरदंशुजाल-जठराच्चण्डांशुकोटि-स्फुरत्-
स्वान्त-ध्वान्त-विसारि निर्म्मल-चिदानन्दत्वयं दैवतम् ।
सर्गं संसृजति स्थितिं वितनुते सृष्टिं पुन र्लुम्पति
प्रोज्झिताञ्जन-नीलनीरदमह श्चित्ते सदैवास्तु नः [८] * ॥ २९ ॥

---

(११) इयमिति क्वचित् । (१२) स्वात्मानं । पाठान्तरम् ।

* तन्त्रसारे त्वेवं दृश्यते,—"तत्पाद-स्फुरदंशुजाल-जठराच्चण्डांशु-कोटीस्खलद्-ध्वान्त-स्वान्त-विसारि निर्म्मलचिदानन्दत्वयं दैवतम् । सर्गं संसृजते स्थितिं वितनुते सृष्टिं पुन र्लुम्पते प्रोज्झिताञ्जन-नीलनीरदमहश्चित्ते सदैवास्तु नः ॥"

या शश्वन्महिषच्छलस्फुटमिलद्गर्ज्जद्द्विधावत्स्खल-
द्व्यान्तः-प्रसरत्तम-स्तमशिरो दैत्यं समालम्बते ।
सा दुर्गा भय-दुर्ग-दुर्गतिहरा लचान्तरत्रासिनी
दृप्यद्दैवतवैरि-दारणपटु र्जीयाज्जयाह्लादिनी [६] ॥ ३० ॥

नृत्यत्-खेटक-चामराञ्चल-बलच्चक्राद्यखर्वावर-
स्फायत्-सैन्यशिलीमुखोच्छलदनल्पाजिह्म-ताम्राम्बुधौ ।
झञ्झावात-विसर्पि-नर्त्तितशिरः-साटोप-दुष्टासुर-
त्रुट्यत्-खड्गविखण्डिताखिल-शकुन्तक्षुत्पिपासोज्ज्वले [१०] ॥ ३१ ॥

चञ्चत्-कम्प-विराम-कालकल-तीव्रास्फाल-सम्पादको-
न्माद्यन्माहिष-तिर्य्यगानतशिरः-शृङ्गान्तराले स्थले ।
वस्त्रेणं वैसुपत्र-मध्यकलिते र्व्वध्वा श्रुती मोत्टभिः
सेव्ये चारु-रणाङ्गने रणमुदा घूर्णायमानाम्बरे * [११] ॥ ३२ ॥

ऊर्द्धाधः-क्रम-सव्यवामकरयो श्चक्रं दरं कर्त्तृकाम्
खेटं वाणधनु-स्त्रिशूल-भयहृन्मुद्रां दधानां शिवाम् ।
श्यामां नील-घनोच्च-कुन्तलचय-प्रोन्नद्धजूटां स्खलद्-
वीरास्फाल-लसत्-करालवदनां घोराट्टहासोद्भटाम् [१२] ॥ ३३ ॥

एवं ये तव देवि ! मूर्त्ति मनघां ध्यायन्ति दुर्गादिभिः
शक्राद्यैरपि पूजितां परपुर-क्षोभादिकं कुर्व्वते ।
राज्यं शत्रुजयः सदर्थधिषणा काव्यामृतादर्शन-
स्तम्भोच्चाटन-मारणादि कृतिनां तेषां स्वयं जायते [१३] ॥ ३४ ॥

स्तोत्रं ते चरणारविन्दयुगल-ध्यानावधाना न्मया
मन्त्रोद्धार-कुलोपचार-रचितं † गूढ़ोपदिष्टं यदि ।

---

* घूर्णायमानां स्मरेदिति तन्त्रसारे । † चरितमिति क्वचित्तन्त्रसारे ।

ये शृण्वन्ति पठन्ति देवि ! तरसा श्री-मोक्ष-कामादय
स्तेषां हस्तगता भवन्ति जगतां मात र्नम स्ते जय [१४] ॥ ३५ ॥

देव्युवाच ।

स्तोत्र-श्रवण-सन्तुष्टा प्रीतास्मि तव भैरव ।
पश्य मूर्त्तिं न च ध्यानयोग्यां मम सुखावहाम् ॥ ३६ ॥
एषा मूर्त्तिः प्रधानं मे कालीमूर्त्ति स्तथैव च ।
त्रिपुराभैरवी-मूर्त्ति राद्या सा परिकीर्त्तिता ॥ ३७ ॥
कुलवारे कुलाष्टम्यां चतुर्द्दश्यां विशेषतः ।
योगिनी-पूजनं तत्र प्रधानं कुलपूजनम् ॥ ३८ ॥
यथा विष्णुतिथौ विष्णुः पूजितो वाञ्छित-प्रदः ।
तथा कुलतिथौ दुर्गा पूजिता वरदायिनी ॥ ३९ ॥
बिल्वमूले प्रान्तरे वा श्मशाने वापि साधकः ।
मांसप्रधानं नैवेद्यं सन्ध्याकाले विधीयते ॥ ४० ॥
काली कालीति वक्तव्ये तत्रोमा शिवरूपिणी ।
पशुरूपा समायाति परिवारगणैः सह ॥ ४१ ॥
भुक्त्वा रौति यदैशान्यां मुख मुत्तोल्य सुस्वरम् ।
तदैव मङ्गलं तस्य नान्यथा कुलभूषण ! ॥ ४२ ॥
अवश्य मन्त्रदानेन नियतं तोषये च्छिवाम् ।
नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम् ॥ ४३ ॥
तथेयं कुलदेवीनां (१४) नित्यता कुलपूजने ।
पशुरूपां शिवां देवीं यो नार्च्चयति निर्जने ॥ ४४ ॥
शिवारावेण तस्याशु सर्व्वं नश्यति निश्चितम् ।
जपपूजा-विधानानि यत्किञ्चित् सुकृतानि च ॥ ४५ ॥

---

(१४) तथेयं कुलसेव्यानां । ख ।

गृहीत्वा शाप मापाद्य (१५) शिवा रोदिति निर्जने ।
एकया भुज्यते यत्र शिवया देव भैरव ! ॥ ४६ ॥
तत्रैव सर्व्वशक्तीनां प्रीतिः परम-दुर्लभा ।
पशुशक्ति र्नरशक्तिः पक्षिशक्ति स्तथैव च (१६) ॥ ४८ ॥
पूजिता विगुणं कर्म्म सगुणं कारयेत्ततः (१७) ।
तेन सर्व्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ॥ ४८ ॥
राजादि-भयमापन्ने (न्नो) देशान्तर-भयादिके (कं) ।
शुभाशुभानि कर्म्माणि विचिन्त्य बलि माहरेत् ॥ ४९ ॥
गृह्ण देवि ! महाभागे ! शिवे ! कालाग्निरूपिणि !
शुभाशुभफलं व्यक्तं (१८) ब्रूहि गृह्ण बलिं तव ॥ ५० ॥
एव मुच्चार्य्य दातव्यो बलिः कुलजनप्रियः ।
यदि न गृह्यते वत्स ! तदा नैव शुभं भवेत् ॥ ५१ ॥
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं मत्वा महादेव ! शान्तिस्वस्त्ययनं चरेत् ॥ ५२ ॥
कुलाचारं दक्षिणाख्यं कथितं तव सुव्रत ! ।
न कस्मैचित् प्रवक्तव्यं यदीच्छे च्छाश्वतं सुखम् ॥ ५३ ॥
निर्जने चैव वक्तव्यं न चैव जनसन्निधौ ।
न पितुः सन्निधाने वा न मातुः सन्निधौ तथा ॥ ५४ ॥
किंवा पक्षि-पतङ्गादि-दर्शने नैव कारयेत् ।
पाताल-मण्डपे वापि मण्डपे वा सुयन्त्रिते ॥ ५५ ॥
निश्छिद्र-मण्डपे वापि कर्त्तव्यं न च सन्निधौ ।
कुलपुष्पं कुलद्रव्यं कुलपूजां कुले जपम् (१९) ॥ ५६ ॥

---

(१५) मासाद्य । क ।   (१६) पक्षि-शक्तिश्च भैरव । । क ।
(१७) सगुणं साधये त्ततः । ख ।
(१८) शुभाशुभ—फलव्यक्तिं । ख ।
(१९) कुलं जपं । ख ।

गुरुं कुलपतिं चापि कुलमालां (२०) कुलाकुलम् ।
कुलचक्रं कुलध्यानं सर्व्वथा न प्रकाशयेत् ॥ ५७ ॥
प्रकाशात् सिद्धिहानिः स्यात् प्रकाशाद्बन्धनादिकम् ।
प्रकाशा न्मन्त्रनाशः स्यात् प्रकाशादेव हिंसनम् ॥ ५८ ॥
प्रकाशा न्मृत्युलाभः स्या न्न प्रकाश्यं कथञ्चन ।
पूजाकाले तु देवेश ! यदि कोऽप्यत्र गच्छति ॥ ५९ ॥
दर्शये द्वैष्णवीं मुद्रां विष्णुन्यासं (२१) तथा स्तवम् ।
प्रकाशाद्यदि गुप्तिः स्यात्तत् प्रकाशा न्न दूषणम् ॥ ६० ॥
गोपनाद्यदि व्यक्तिः स्यान्न गुप्तिः साभिधीयते ।
कदाचिदङ्गहानि स्तु न च व्यक्तिः कदाचन ॥ ६१ ॥
(वरं पूजा न कर्त्तव्या न च व्यक्तिः कदाचन) ।
एतत्तन्त्रं (२२) गृहे यस्य कुलाचार-समन्वितम् ॥ ६२ ॥
कुलेश्वर-लिपि र्वापि तत्रैवाहं सदा स्थिता ।
तेषां गृहेषु पापानि दुष्कृतानि भयादिकम् ॥ ६३ ॥
पुस्तकस्थिति-मात्रेण नश्यन्ति नात्र संशयः ।
लिखित्वा कुलहस्तेन कुलद्रव्येण भैरव !
कुलवारे पठेद्वापि कुलहस्ते च धारयेत् ।
सर्व्वथा तस्य गेहं (२३) वै न संत्यक्ष्यामि भैरव ! ॥ ६५ ॥
अत्यन्तरोगयुक्तो वा शुभहीनोऽपि वा पुनः (२४) ।
एतत्तन्त्र-समायोगात्त्याज्यो न हि कथञ्चन ॥ ६६ ॥
कुलं कञ्चित् समालोक्य लभ्यते कुल पूजनम् ।
एतद्ग्रन्थ-समायोगात् कपाली-करणं यदि ॥ ६७ ॥

---

(२०) कुलमानं । क ।
(२१) विष्णुन्यासं तथाचरेत् । ख ।
( ) बन्धनी-मध्यस्थं ख-पुस्तके नास्ति ।
(२२) एतद्‌तन्त्रः । ख ।
(२३) देहं वै । ख ।
(२४) अन्यरोगयुक्तोपि शुभहीनोपि वा पुनः । क ।

क्रियते साधकेन्द्रेण तदा किं वा न लभ्यते ।
संपूज्य कुल-देवञ्च (२५) गृह्णीयाच्चैव नान्यथा ॥ ६८ ॥
न स्नेहान्न च लोभेन न भीत्या करणा ( कारणा ) न्न च ।
राज्यहानि वैरं वापि सुतहानिस्तु वा पुनः ॥ ६९ ॥
वित्तस्य हानि वा देवेश (२६) ! न प्रकाश्यं कदाचन ।
मन्मायामोहितश्चापि अन्यदेवरतोऽपि च ॥ ७० ॥
प्रकाशात् क्षोभ माप्नोति सत्यं सत्यं वदाम्यहम् ।
यथा योषि-च्छरीरेण विचरामि पुनः पुनः ॥ ७१ ॥
तथेमं ग्रन्थ मासाद्य तिष्ठामि परमा कला ।
महाचीनक्रमं वापि महानीलं सदाशिवम् ॥ ७२ ॥
सङ्केतं वापि योन्मत्तं यत् किञ्चिद्वीर-साधनम् ।
कुलाचारं विना वत्स ! नैव सिद्धि-प्रवर्त्तकम् ॥ ७३ ॥
कुलवारे कुलर्क्षे च कुललग्ने कुल-क्षणे ।
योगिनीनां मदा (सदा) पूजा मनसापि न हीयते ॥ ७४ ॥
कुलीनां वा (ना)वमन्येत नावज्ञां कारये द्बुधः (२७) ।
अभिभूति-समाकीर्णं व्याधियुक्तञ्च भैरव ! ॥ ७५ ॥
एतद्ग्रन्थेन निर्मुञ्छ्य पिच्छकोपरि धारयेत् । (२८)
सप्ताहं क्रमयोगेन मुक्तो भवति दुर्ग्रहात् ॥ ७६ ॥
एतत्ते कथितं वत्स ! देवीहृदय मुत्तमम् ।
न कस्मैचित् प्रयोक्तव्यं प्रवक्तव्यं कथञ्चन ॥ ७७ ॥
( इदानीं भव सर्व्वज्ञ सर्व्वतन्त्र-विशारदः ।
त्वमेव वक्ता शास्त्राणां न परोपि महेश्वर ! ॥ ७८ ॥

---

(२५) कुलदाम्पत्यम् । क । (२६) देव । क ।
(२७) कुलीनं वावमन्येत कुलज्ञां तत्र कारयेत् । ख ।
(२८) एतद्ग्रन्थेन निर्मञ्छेत् पिटकोपं विधारयेत् । ख ।
( ) बन्धनीमध्यस्था सार्द्धत्रिश्लोकी ख-पुस्तके नास्ति ।

गुरु स्त्वं सर्व्वतन्त्राणां नाहं नापि हरिः प्रभुः ।
कारणावस्थयापन्ना यद्यहं कुलरूपिणी ॥ ७९ ॥
न कार्य्यं नापि यत् किञ्चित् ब्रह्मोहं स्फुरत-( स्फुरित ) प्रभम् ।
कार्य्यभाव-समापन्ना यदाहं विश्वरूपिणी ॥ ८० ॥
तदा त्वमेव तन्त्राणां वक्ता नाहं महेश्वर ! ) ।
अहं विशामि त्वद्देहे शक्त्या युक्तो भव प्रभुः ॥ ८१ ॥
मां विना जननी कापि नैव कार्य्य-विभाविनी ।
अतः कार्य्य ( कार्य्यें ) समुत्पन्ने पुत्रत्वं त्वयि वर्त्तते ॥ ८२ ॥
त्वां विना जनकः कोपि नैव कार्य्य-विभावकः ।
अत स्त्वमेव जनको नास्त्यन्योपि कथञ्चन ॥ ८३ ॥
कदाचित् पितृरूपोऽसि कदाचिद् गुरु-रूपधृक् ।
कदाचित् पुत्रतापन्नः कदाचिच्छिष्य एव हि ॥ ८४ ॥
शिवशक्तिसमायोगा ज्जायते सृष्टि-कल्पना ।
( शिवशक्तिसमायोगात् कुलादिमुक्ति-कल्पना ) (२९) ॥ ८५ ॥
शिवशक्तिमयं सर्व्वं यत्किञ्चि ज्जगती-गतम् ।
तस्मा त्त्वमेव सर्व्वत्र सर्व्वत्राहं महेश्वर ! ॥ ८६ ॥
सर्व्वं त्वमेव देवेश ! सर्व्वञ्चाहं सनातन ! ।
गुरु स्त्वं यदि शिष्योऽहं तदा मास्तु विवेचना ( ३० ) ॥ ८७ ॥
तस्माद् भव गुरु नाथ ! शिष्याहं परमेश्वर ! ( ३१ ) ॥ ८८ ॥
इति कुलचूड़ामणौ सप्तमः पटलः समाप्तः ।

॥ समाप्तश्चायं ग्रन्थः ॥

---

( २९ ) एतत् क-पुस्तके नास्ति ।　　( ३० ) शास्त्र विचारणा । ख ।
( ३१ ) तस्मा त्त्वमेव नाथस्य शिष्योपि परमेश्वरः । ख ।

# सूचीपत्रम् ।

## प्रथमः पटलः ।



## द्वितीयः पटलः ।

### भैरवं प्रति देवीवाक्यम्



## तृतीयः पटलः ।

# शुद्धिपत्रम् ।



| पृष्ठा | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ५ | चाम्नाया | चाम्नायाः |
| ६ | १३ | कुलषिष्यो | कुलशिष्यो |
| ७ | १ | मत्भूतं | मद्भूतं |
| १३ | ६ | कुचावलम् | कुचाचलम् |
| १६ | २३ | महालच्चि | महालच्मि |
| १८ | ८ | जन्मणि | जन्मनि |
| २१ | २१ | प्रणन्य | प्रणम्य |
| २४ | १८ | गीयते | गीयते |
| २६ | ६ | स्थापतित्वा | स्थापयित्वा |
| ३४ | ८ | इशाने | ईशाने |
| ४८ | २४ | एतद्दत्त्वः | एतत्तत्त्वः |
| ४६ | १७ | निर्मूञ्छ्य | निर्मञ्छ्य |
| ५० | ३ | ब्रह्मोहं | ब्रह्माहं |

